त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा
स्वर्गतिं प्रार्थयंते । ते पुण्यमासाद्य सुरेंद्रलो-
कमश्नंति दिव्यान्दिवि देवभोगान् ॥ २० ॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये
मर्त्यलोकं विशंति । एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभंते ॥ २१ ॥
अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्

येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः ।
तेऽपि मामेव कौंतेय यजंत्याविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥
यांति देवव्रता देवान् पितॄन्यांति पितृव्रताः ।
भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि
माम् ।२५। पत्रं पुष्पं फलं तोयं यो मे भक्त्या
प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रय-

प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रय-

तात्मनः ॥ २६ ॥ यत्करोषि यदश्नासि

यज्जुहोषि ददासि यत् । यत्तपस्यसि कौं-

तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥ शुभा-

शुभफलैरेवं मोक्ष्यसे कर्मबंधनैः । संन्या-

सयोगयुक्तात्मा विमुक्तो मामुपैष्यसि २८

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः

ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम्

अपि चेत्सुदुराचारो भजते मामनन्यभाक्

साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः
क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति
कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पाप-
योनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि
यांति परां गतिम् ॥ ३२ ॥ किं पुनर्ब्राह्मणाः
पुण्या भक्ता राजर्षयस्तथा । अनित्यमसुखं
लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे राजविद्या-राजगुह्ययोगो नाम नवमोऽध्यायः॥ ९ ॥

श्रीभगवानुवाच ॥

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः २

यो मामजमनादिं च वेत्ति लोकमहेश्वरम्
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ।
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः
भवंति भावा भूतानां मत्त एव पृथग्विधाः।
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः

एतां विभूति योगं च मम यो वेत्तिं तत्त्वतः ।
सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजंते मां बुधा भावसमान्विताः
मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् ।
कथयंतश्च मां नित्यं तुष्यंति च रमन्ति च ।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयांति ते ॥

तेषामेवानुकंपार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता

अर्जुन उवाच ॥

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ।
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
नहि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य
तिष्ठसि ॥ १६ ॥ कथं विद्यामहं योगिंस्त्वां
सदा परिचिंतयन् । केषु केषु च भावेषु चिं-
त्योऽसि भगवन्मया ॥ १७ ॥ विस्तरेणात्म-

नो योगं विभूतिं च जनार्दन। भूयः कथय
तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

श्रीभगवानुवाच ॥

हंत ते कथयिष्यामि दिव्या ह्यात्मविभूतयः
प्राधान्यतः कुरुश्रेष्ठ नास्त्यंतो विस्तरस्य मे
अहमात्मा गुडाकेश सर्वभूताशयास्थितः।
अहमादिश्च मध्यं च भूतानामंत एव च २०
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशु-

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशु-

मान्। मरीचिर्मरुतामस्मि नक्षत्राणामहं-
शशी॥ २१॥ वेदानां सामवेदोऽस्मि दे-
वानामस्मि वासवः। इंद्रियाणां मनश्चा-
स्मि भूतानामस्मि चेतना ॥ २२ ॥
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश्चास्मि मेरुःशिखरिणामहम्॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।
सेनानीनामहं स्कंदः सरसामस्मि सागरः॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः
उच्चैः श्रवसमश्वानां विद्धि माममृतोद्भवम्
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः

प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः

अनंतश्चास्मि नागानां वरुणो यादसामहम्
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥
प्रह्लादश्चास्मि दैत्यानां कालःकलयतामहम्
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जा-
ह्नवी ॥ सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन

अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः
क्षमा ॥ ३४॥ बृहत्साम तथा साम्नां गायत्री
छंदसामहम् । मासानां मार्गशीर्षोऽहं ऋतूनां
कुसुमाकरः ॥ ३५ ॥ द्यूतं छलयतामस्मि
तेजस्तेजस्विनामहम् । जयोऽस्मि व्यव-

तेजस्तेजस्विनामहम् । जयोऽस्मि व्यव-

सायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पांडवानां धनंजयः

मुनीनामप्यहं व्यासः कवीनामुशना कविः

दंडो दमयतामस्मि नीतिरस्मि जिगीषताम्

मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्

यच्चापि सर्वभूतानां बीजं तदहमर्जुन।

न तदस्ति विना यत्स्यान्मया भूतं चराचरम्

नांतोऽस्ति मम दिव्यानां विभूतीनां परंतप

एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥
अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । वि-
ष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

अर्जुन उवाच ॥

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।

यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम्
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ।

श्रीभगवानुवाच ॥

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः
नानाविधानि दिव्यानि नानावर्णाकृतीनि च
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ।६।
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ७
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।

दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥

संजय उवाच ॥

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥
दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ।

सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥११॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महा-
त्मनः ॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमने-
कधा । अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥

अर्जुन उवाच ॥

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूत-

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूत-

विशेषसंघान् । ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्व-
तोऽनंतरूपम् । नांतं न मध्यं न पुनस्तवा-
दिं पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥
किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्व-
तो दीप्तिमन्तम् । पश्यामि त्वां दुर्निरीक्ष्यं
समंताद् दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य
परं निधानम् । त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥
अनादिमध्यांतमनंतवीर्यमनंतबाहुं शशि-
सूर्यनेत्रम् । पश्यामि त्वां दीप्तहुताशव-
क्त्रं स्वतेजसा विश्वमिदं तपंतम् ॥ १९ ॥
द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन
दिशश्च सर्वाः । दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं

दिशश्च सर्वाः । दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥
अमी हि त्वां सुरसंघा विशंति केचिद्भीताः
प्रांजलयो गृणंति । स्वस्तीत्युक्त्वा महर्षि-
सिद्धसंघाःस्तुवंति त्वां स्तुतिभिःपुष्कलाभिः
रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ
मरुतश्चोष्मपाश्च । गंधर्वयक्षासुरसिद्धसंघा
वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबा-

हूरुपादम् ।बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः
प्रव्यथितास्तथाऽहम् ॥ २३ ॥ नभःस्पृशं
दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालने-
त्रम् । दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा धृतिं
न विंदामि शमं च विष्णो ॥ २४ ॥
दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव काला-
नलसंनिभानि । दिशो न जाने न लभे च
शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥

शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवा-
वनिपालसंघैः । भीष्मो द्रोणः सूतपुत्रस्त-
थासौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशंति दंष्ट्राकरा-
लानि भयानकानि । केचिद्विलग्ना दशनां-
तरेषु संदृश्यंते चूर्णितैरुत्तमांगैः ॥ २७ ॥
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवा-
भिमुखा द्रवंति । तथा तवामी नरलोक-

वीरा विशंति वक्त्राण्यभिविज्वलंति ॥२८॥ ११
यथा प्रदीप्तं ज्वलनं पतंगा विशंति ना-
शाय समृद्धवेगाः । तथैव नाशाय विशंति
लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥
लेलिह्यसे ग्रसमानः समंताल्लोकान्समग्रा-
न्वदनैर्ज्वलद्भिः । तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपंति विष्णो ॥ ३० ॥
आख्याहि मे को भवानुग्ररूपो नमोस्तु ते

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते 

देववर प्रसीद । विज्ञातुमिच्छामि भवंत-
माद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥३१॥

श्रीभगवानुवाच ॥

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्स-
माहर्तुमिह प्रवृत्तः । ऋतेऽपि त्वां न भवि-
ष्यंति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः
तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रू-
न्भुंक्ष्व राज्यं समृद्धम् । मयैवैते निहताः

पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ।३३।
द्रोणं च भीष्मं च जयद्रथं च कर्णं तथा-
न्यानपि योधवीरान् । मया हतांस्त्वं जहि
मा व्यथिष्ठा युद्ध्यस्व जेताऽसि रणे सपत्नान्

संजय उवाच ॥

एतद्श्रुत्वा वचनं केशवस्य कृतांजलिर्वेप-
मानः किरीटी । नमस्कृत्वा भूय एवाह
कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

अर्जुन उवाच ॥

स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृ-
ष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो
द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥३६॥
कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्म-
णोऽप्यादिकर्त्रे । अनंत देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥ त्वमादि-
देवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं

निधानम् । वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनंतरूप ॥ ३८ ॥ वायुर्य-
मोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपिता-
महश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च
भूयोऽपि नमो नमस्ते ॥ ३९ ॥ नमः पुरस्ता-
दथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।
अनंतवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि
ततोऽसि सर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं

ततोऽसि सर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं

यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥

 

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वा-
महमीशमीड्यम् । पितेव पुत्रस्य सखेव स-
ख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्य-
थितं मनो मे । तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥
किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां
द्रष्टुमहं तथैव । तेनैव रूपेण चतुर्भुजेन

द्रष्टुमहं तथैव । तेनैव रूपेण चतुर्भुजेन

सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

श्रीभगवानुवाच ॥

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शि-
तमात्मयोगात् । तेजोमयं विश्वमनंतमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न
तपोभिरुग्रैः । एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

 

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं
घोरमीदृङ्ममेदम् । व्यपेतभीः प्रीतमनाः
पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

संजय उवाच ॥

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्श-
यामास भूयः । आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्जुन उवाच ॥

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥

श्रीभगवानुवाच ॥

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥५४
मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ५५

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः॥ ११ ॥

अर्जुन उवाच ॥

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥

ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥

श्रीभगवानुवाच ॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥३॥
संनियम्यैंद्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥४॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः
अनन्येनैव योगेन मां ध्यायंत उपासते ॥६॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः।८
अथ चित्तं समाधातुं न शक्नोषि मयि

अथ चित्तं समाधातुं न शक्नोषि मयि

स्थिरम् । अभ्यासयोगेन ततो मामिच्छाप्तुं
धनंजय ॥९॥ अभ्यासेऽप्यसमर्थोऽसि मत्क-
र्मपरमो भव । मदर्थमपि कर्माणि कुर्वन्सि-
द्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोऽसि
कर्तुं मद्योगमाश्रितः । सर्वकर्मफलत्यागं
ततः कुरु यतात्मवान् ॥ ११ ॥ श्रेयो हि
ज्ञानमभ्यासाद्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनंत-

रम् ॥ १२ ॥ अद्वेष्टा सर्वभूतानां मैत्रः करुण
एव च । निर्ममो निरहंकारः समदुःखसुखः
क्षमी ॥ १३ ॥ संतुष्टः सततं योगी यतात्मा
दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्यो मे भक्तः
स मे प्रियः ॥ १४ ॥ यस्मान्नोद्विजते लोको
लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो
यः स च मे प्रियः ॥ १५ ॥ अनपेक्षः शुचि-
र्दक्ष उदासीनो गतव्यथः । सर्वारंभपरि-

दक्ष उदासीनो गतव्यथः । सर्वारंभपरि-

त्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः १८
तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।

श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

अर्जुन उवाच ॥

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥

श्रीभगवानुवाच ॥

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः १

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः १

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ३

ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।

इन्द्रियाणि दशैकं च पंच चेन्द्रियगोचराः ५

 

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥
अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः
इंद्रियार्थेषु वैराग्यमनहंकार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥
असक्तिरनभिष्वंगः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ९

नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ९

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥ १२॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ १३

सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
बहिरंतश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ।
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥

ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान्
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥

उपद्रष्टानुमंता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥
ध्यानेनात्मनि पश्यंति केचिदात्मानमात्म-
ना। अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥
अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥

तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः॥ ८१

यावत्संजायते किंचित्सत्वं स्थावरजंगमम्।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ॥२६॥
समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम्। विन-
श्यत्स्वविनश्यंतं यः पश्यति स पश्यति॥
समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां
गतिम्॥ प्रकृत्यैव च कर्माणि क्रियमाणानि
सर्वशः। यः पश्यति तथाऽऽत्मानमकर्तारं स

पश्यति ॥ २९ ॥ यदा भूतपृथग्भावमे-
कस्थमनुपश्यति । तत एव च विस्तारं
ब्रह्म संपद्यते तदा ॥ ३० ॥ अनादि-
त्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीर-
स्थोऽपि कौंतेय न करोति न लिप्यते ३१
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावास्थितो देहे तथात्मा नोपलिप्यते॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥
क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा । भूत-
प्रकृतिमोक्षं च ये विदुर्यांति ते परम् ३४

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

श्रीभगवानुवाच ॥

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।

सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥
सर्वयोनिषु कौंतेय मूर्तयः संभवंति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥
निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥५
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥६॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ।
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ७
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥
सत्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ९
रजस्तमश्चाभिभूय सत्वं भवति भारत ।

रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा १०

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।

ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥

लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ।

रजस्येतानि जायंते विवृद्धे भरतर्षभ ।१२।

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।

तमस्येतानि जायंते विवृद्धे कुरुनंदन १३

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत ।

तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन १३
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसंगिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते १५
कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम्
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥
सत्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च १७
ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसा

जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति
गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान्
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते २०

अर्जुन उवाच ॥

कैर्लिंगैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते २१

श्रीभगवानुवाच ॥

प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति २२
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तंत इत्येव योऽवतिष्ठति नेंगते २३
समदुःखसुखः स्वस्थः समलोष्टाश्मकांचनः
तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः

सर्वारंभपरित्यागी गुणातीतः स उच्यते २५
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

श्रीभगवानुवाच ॥

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।

छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् १
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा
विषयप्रवालाः । अधश्च मूलान्यनुसंततानि
कर्मानुबंधीनि मनुष्यलोके ॥ २ ॥ न रूपम-
स्येह तथोपलभ्यते नांतो न चादिर्न च संप्र-
तिष्ठा । अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण
दृढेन छित्त्वा ॥ ३ ॥ ततः पदं तत्परिमार्गि-
तव्यं यस्मिन्गता न निवर्तंति भूयः । तमेव

चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या
विनिवृत्तकामाः । द्वंद्वैर्विमुक्ताः सुखदुःख-
संज्ञैर्गच्छंत्यमूढाः पदमव्ययं तत् ॥ ५ ॥
न तद्भासयते सूर्यो न शशांको न पावकः ।
यद्गत्वा न निवर्तंते तद्धाम परमं मम ॥ ६ ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति

मन:षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ८७

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥
उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वि-
तम् । विमूढा नानुपश्यंति पश्यंति ज्ञानच-
क्षुषः ॥ १० ॥ यतंतो योगिनश्चैनं पश्यंत्या-
त्मन्यवस्थितम् । यतंतोऽप्यकृतात्मानो नैनं

पश्यंत्यचेतसः ॥ ११ ॥ यदादित्यगतं तेजो
जगद्भासयतेऽखिलम्। यच्चंद्रमसि यच्चाग्नौ
तत्तेजो विद्धि मामकम् ॥ १२ ॥ गामाविश्य
च भूतानि धारयाम्यहमोजसा। पुष्णामि
चौषधीः सर्वाः सोमो भूत्वा रसात्मकः १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृति-

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृति-
र्ज्ञानमपोहनं च। वेदैश्च सर्वैरहमेव वेद्यो
वेदांतकृद्वेदविदेव चाहम् ॥ १५ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥ १५ ॥

श्रीभगवानुवाच ॥

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्

दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्

आहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम्
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता
भवंति संपदं दैवीमभिजातस्य भारत ॥३॥
दंभो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥
दैवी संपद्विमोक्षाय निबंधायासुरी मता ।
माशुचः संपदं दैवीमभिजातोऽसि पांडव ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥८॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥

प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९

काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तंतेऽशुचिव्र-
ताः चिंतामपरिमेयां च प्रलयांतामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहंते कामभोगार्थमन्यायेनार्थसंचयान् ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् १३

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति स-
दृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञा-
नविमोहिताः ॥ १५ ॥ अनेकचित्तविभ्रां-
ता मोहजालसमावृताः । प्रसक्ताः काम-
भोगेषु पतंति नरकेऽशुचौ ॥ १६ ॥
आत्मसंभाविताः स्तब्धा धनमानमदान्वि-

आत्मसंभाविताः स्तब्धा धनमानमदान्वि-

ताः । यजंते नामयज्ञैस्ते दंभेनाविधिपूर्वकम्
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषंतोऽभ्यसूयकाः १८
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि
मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।

कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजे-
त् ॥ एतैर्विमुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माच्छास्त्रंप्रमाणंते कार्याकार्यव्यवस्थितौ
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

अर्जुन उवाच ॥

ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयाऽन्विताः
तेषां निष्ठा तु का कृष्ण सत्वमाहो रजस्तमः॥

श्रीभगवानुवाच ॥

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा
सात्विकी राजसी चैव तामसी चेति तां शृणु।
सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥

यजंते सात्विका देवान्यक्षरक्षांसि राजसाः
प्रेतान्भूतगणांश्चान्ये यजंते तामसा जनाः ४
अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः।
दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ।
मां चैवांतःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु आ-

यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु आ-

युःसत्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः

स्निग्धाःस्थिरा हृद्या आहाराः सात्त्विकप्रियाः

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः

आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥

यातयामं गतरसं पूति पर्युषितं च यत्।

उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्।

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते।

यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥

अभिसंधाय तु फलं दंभार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् १२
विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते

स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते।१६।
श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते॥
सत्कारमानपूजार्थं तपो दंभेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥

ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ 

तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः ।
प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥
तदित्यनभिसंधाय फलं यज्ञतपः क्रियाः ।
दानक्रियाश्चविविधाः क्रियंते मोक्षकांक्षिभिः
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्माणि तथा सच्छब्दः पार्थ युज्यते ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते २७

 

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः॥१७॥

अर्जुन उवाच॥

संन्यासस्य महाबाहो तत्त्वमिच्छामिवेदितु-
मात्यागस्य च हृषीकेश पृथक्केशिनिषूदन १

श्रीभगवानुवाच॥

काम्यानां कर्मणां न्यासंसन्न्यासं कवयोविदुः

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः

सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥
यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च

कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
संगं त्यक्त्वा फलं चैव स त्यागःसात्विको मतः
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।


त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां कचि-
त् ॥ पंचैतानि महाबाहो कारणानि निबोध मे
सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम् ।
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।

विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः १५
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हंति न निबद्ध्यते ॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।

कारणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः १८
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अवि-
भक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधा-
न् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ।
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।

अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् २२
नियतं संगरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् २४
अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते २५
मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।

सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥ अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय २९

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी
धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिःसा पार्थ सात्वि-

की । यया तु धर्मकामार्थान् धृत्या धार-
यतेऽर्जुन । प्रसंगेन फलाकांक्षी धृतिः सा
पार्थ राजसी ॥ यया स्वप्नं भयं शोकं वि-
षादं मदमेव च । न विमुंचति दुर्मेधा
धृतिः सा पार्थ तामसी ॥ ३५ ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ।
अभ्यासाद्रमते यत्र दुःखांतं च निगच्छति॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । त-

त्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥
विषयेंद्रियसंयोगाद् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥
यदग्रे चानुबंधे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामससमुदाहृतम् ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप । 

कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षांतिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभा-
वजम् ॥ ४२ ॥ शौर्यं तेजो धृतिर्दाक्ष्यं
युद्धे चाप्यपलायनम् । दानमीश्वरभा-
वश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः॥
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥
सहजं कर्म कौंतेय सदोषमपि न त्यजेत्।
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ४८

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति।
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।
समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा ॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं
नियम्य च । शब्दादीन्विषयांस्त्यक्त्वा
रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।

ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि-
तत्वतः । ततो मां तत्वतो ज्ञात्वा विशते
तदनंतरम् ॥ ५५ ॥ सर्वकर्माण्यपि सदा

कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवा-
प्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति

स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि
तत्॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्र-
सादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम्॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ६३

सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टो-
ऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः
इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यक-

र्मणाम्।७१।कच्चिदेतद्श्रुतं पार्थ त्वयैकाग्रेण
चेतसा। कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय

अर्जुन उवाच ॥

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्म-
याच्युत । स्थितोऽस्मि गतसंदेहः करिष्ये
वचनं तव ॥ ७३ ॥

संजय उवाच ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ७४

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात् साक्षात्कथयतः
स्वयम् ॥ ७५ ॥ राजन्संस्मृत्य संस्मृत्य
संवादमिममद्भुतम् । केशवार्जुनयोः पुण्यं
हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥ तच्च संस्मृत्य
संस्मृत्य रूपमत्यद्भुतं हरेः । विस्मयो मे
महान् राजन् हृष्यामि च पुनःपुनः ॥ ७७
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।

तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

॥ श्रीमद् भगवद्गीता समाप्ता ॥

# प्रकाशकका निवेदन.

लोकहितावह पुस्तकें लागत मात्रके मूल्यसे प्रकाशित कर, सर्व सामान्यके लिये हो सकें उतनी सुल्लभ बनानेके उद्देशसे 'सस्तुं साहित्य वर्धक कार्यालय' संस्थापित हुआ है. यह संस्था केवल सार्वजनिक है; अर्थात् इस पर किसीका स्वामित्व नहीं है.

इस संस्थाद्वारा आज पर्यन्त १५० से अधिक सद्ग्रन्थोंकी आठ लाखसे अधिक प्रतियां (करीव चार लक्ष रूपयेके मूल्यकी) गुजराती भाषामें प्रकाशित हो चुकी हैं.

इन ग्रंथोंमें विशेष प्रमाण स्वामी रामतीर्थ, स्वामी विवेकानंद, परमहंस रामकृष्ण देव, भगवद्गीता, योगवासिष्ठ, वाल्मीकि रामायण, भागवत, दासबोध, ज्ञानेश्वरी, शांतिपर्व, आर्यधर्मनीति इ० धर्मपुस्तकोंका है; और शेष ग्रंथ जीवनचरित्र, इतिहास, वैद्यक, सात्विक गल्पें, नीति, चारित्र, इत्यादि विषयके हैं.

उपर्युक्त संख्यामें दो लक्षके करीव श्रीमद् भगवद्गीतायें हैं. गीताके गुटके अवतक गुजराती टीकावाले ही छपते रहे; किंतु अव संस्थाका निजी मुद्रणालय शुरू होनेके कारण मराठी तथा हिन्दी टीकावाले गुटके, मूलमूल भगवद्गीतायें और पंचरत्न गीतायें भी प्रकाशित हो रही हैं.

गुजरातमें रहते हुए अन्य प्रान्तवासी भाइयोंकी यह जो अल्पस्वल्प सेवा शुरु हो सकी है, उसकी वृद्धि होना, वा वंद होजाना, यह केवल इस सेवाका जैसा लाभ उठाया जायगा उसीके उपर निर्भरहै.

निर्धन मनुष्य भी श्रीमद् भगवद्गीताका लाभ उठा सकें, इस लिये उसका सारभूत १८ वाँ अध्यायकी, हिंदी, मराठी तथा गुजराती टीका-संयुक्त अलग अलग पुस्तिकायें केवल दो पैसेके मूल्यसे निकाली गइ हैं. अढाइ आनेकी पोस्ट टीकीट भेजनेसे पांच पुस्तिकायें डाक खर्च न लेकर भेजी जाती हैं.

धनिक सज्जनोंको उचित है कि ऐसी स्वल्प मूल्यकी पुस्तक—पुस्तिकायें जनसमूहमें बांटकर पुण्यकी वृद्धि करें. और धनके पीछे लगे हुए अनेकविध पापोंसे हो सकें उतना अपना पल्ला छुडावें.

वैसेही लग्न, जन्म, मरण इत्यादि छोटे बडे प्रसंगपर महमान, बिरादर, भूदेव, इत्यादि का भोजनादिसे सत्कार करनेके साथ२ उनके मानसिक भोजनरूप अच्छी अच्छी पुस्तक पुस्तिकायें भी उनको भेट करें. क्योंकि ज्ञानरूपी भोजन अन्य सारे भोजनोंसे बढकर है. ऐसे प्रसंगपर अन्य प्रकारका व्यय थोडासा कमी करदेनेपर यह सत्कार मुफ्तमें भी किया जा सक्ता है. देशकी ऐसी दीनहीन दशामें इस प्रकार "ज्ञानभेट" की लेनदेन हर जगह एक उत्तम रूढी के तौरपर चलपडना चाहिये. बुद्धिमानोंको उचित है कि वे अपनी वाणी और करणी द्वारा ऐसी उत्तम प्रथाको प्रचलित करें.

भगवान श्री कृष्णचंद्र आनंदकंदकी अमृतवाणीरूप इन पुस्तक पुस्तिकाओंको प्रत्येक हिंदु संतान प्रेमपूर्वक ग्रहण करके अपने हाथको, पठन करके वाणीको, औरमनन-निदिध्यासन करके अंतःकरणको पवित्र करते हुए दुःख मात्रकी आत्यंतिक निवृत्ति पूर्वक सच्चिदानंदमय परम धामको प्राप्त होवे इति ॐ तत् सत्.

रामजयंति-सं. १९७९

# ग्रन्थविक्रेता इ० को सूचना.

मूल मूल भगवद्गीता, पंचरत्न गीता, तथा हिन्दी और मराठी टीका संयुक्त गीताओंका मूल्य जिस लागत के अनुसार रक्खा गया है; उसमें डाक खर्चकाभी समावेश है; इसलिये डाक द्वारा मंगानेवालोंको मात्र मनीऑर्डर तथा रजीष्टरी खर्चेही-(एकसे दस रुपयेकी पुस्तकें तक चार आना) देना होगा. अहमदाबादके कार्यालयसे उक्त पुस्तकें रुबरु लेनेवालोंको डाक खर्चके बदलेमे १० से १५ टके काट दिये जाते हैं; तथा एकसाथ २५ या विशेष रुपयेकी पुस्तकें लेनेवालोंको कमीशन सहित कुल २५ टके काट दिये जाते हैं. रेल्वे पारसल द्वारा २५ से अधिककी उपर्युक्त पुस्तकें मंगानेवालोंको १२॥ टका कमीशन और हिन्दके कोइभी स्टेशन तकका रेल खर्च दिया जाता है. विना पूरे दाम आये रेल्वे पारसल भेजा नहीं जाता.

गुजराती भाषामें इस संस्था द्वारा अनेक पुस्तकें प्रकाशित हुइ हैं. सूचिपत्र मुफ्त भेजा जायगा.

सस्तुं साहित्य वर्धक कार्यालय. अहमदाबाद

# शुद्धिपत्र.

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १४ | २ | लुप्ता | लुप्त |
| १७ | ७ | स्तत्व | स्तत्त्व |
| १८ | २ | पुरूष | पुरुष |
| २८ | १० | सवर्कर्माणि | सर्व कर्माणि |
| ३० | १ | भगवानुवाच ॥ | श्री भगवानुवाच॥ |
| ३३ | ८ | गतिः | गतिः ॥ |
| ४५ | १ | राम् । | राम् ॥ |
| ४७ | ९ | ते । | ते ॥ |
| ६० | ९ | विभूति | विभूतिं |
| ६० | ९ | वेर्त्ति | वेत्ति |
| ६३ | ५ | उच्चैः श्रवस | उच्चैःश्रवस |
| ७९ | १३ | मश्नते | मश्नुते |
| ८५ | ५ | मश्नते | मश्नुते |
| ९३ | ८ | शृणु | शृणु ॥ |
| ९८ | ९ | कारणं | करणं |
| १०२ | ९ | मद्यपाश्रयः | मद्व्यपाश्रयः |

